श्रीमते रामानुजाय नमः श्रीपराशरभट्टार्य्यः श्रीरंगेशपुरोहितः श्रीवत्सांकसुतः श्रीमा
न्श्रेयसे मेस्तु भूयसे ॥१॥ कदाहं कावेरीतटपरिसरे रंगनगरे शयानं भोगींद्रे शतमखमणिश्या
मलरुचिं उपासीनः क्रोशन्मधुमथननारायणहरे मुरारे गोविंदेत्यनिशमनुनेष्यामि दिवसा
न् ॥२॥ कदाहं कावेरीविमलसलिले वीतकलुषो भवेयं तत्तीरे श्रममनुषिवसेयं घनवने कदावा
तत्पुण्ये महति पुलिने मंगलगुणं भजेयं रंगेशं कमलनयनं शेषशयनम् ॥३॥ पुंगीकंठद्वयस
सरसः स्निग्धनीरोपकंठमाविर्मोदात्स्तिमितशकुनानूदितब्रह्मघोषां मार्गे मार्गे पथिक
निवहै रुद्ध्यमानायमार्गां पश्येयं तां पुनरपि पुरीं श्रीमतीं रंगधाम्नः ४ कस्तूरीकलितोर्द्ध
पुंड्रतिलकं कर्णांतलोलेक्षणं मुग्धस्मेरमनोहराधरदलं मुक्ताकिरीटोज्वलम् पश्यन्मा
नसपश्यतोहरतरं पर्य्यायपंकेरुहं श्रीरंगाधिपतेः कदानुवदनं सेवेय भूयोप्यहम् ५
नगानुपीतामृतमम्बुच्छिन्नानां नाकौकसां नंदनवाटिकासु रंगेश्वर त्वत्पुरमाश्रितानां

1

त्तापुनर्विषयासक्तमत्वं प्राप्नोति यतो ज्ञाननाम यथा दंडचक्रादीनां परस्परसहायता ११ कर्तव्यमेतित्वो
क्तमेवाविद्वत्करोति कर्मेति वीरहा वा एष देवानां योऽग्निमुद्वासयते यावज्जीवमग्निहोत्रं जुहो
तीति श्रुतिः तत्र आसिद्धान्ती शंकते नन्विति ध्रुवां स्थिरं कार्यं परं पुरुषार्थं मोक्षजननिकां विद्या

कर्माकृतौ दोषमपि श्रुतिर्जगौ तस्मात्सदा कार्यमिदं मुमुक्षुणा ननु स्वतंत्रा
ध्रुवकार्यकारिणी विद्या न किंचिन्मनसाप्यपेक्षते ॥१२॥

उत्तरः स्वतंत्रा विनापि सहायेन स्वकार्यसंपादने समर्था यथा तेजास्तिमिरनिवर्त्तने समर्थं मनसा किं
चित्सहायभूतं वस्तु नापेक्षते न तथा फलजननीपि सहायांतरसंभावनापि नेति भावः अनेन विद्याफ
लजनने निरपेक्षा स्वतंत्रा विद्या तेजोवदित्यनुमानं सूचितम् ॥ १२

अत एव कर्मणा नाज्ञाननाशिनीत्याह नाज्ञानेत्यादि यतः कर्मणो विरोधाभावान्नाज्ञाननाशो नापि राग
नाशो । न ततः कामनिवृत्तिर्नातः पुनः सदोषं नापि फलत्वादि विशिष्टं कर्म वोद्भवेत् कर्मणश्च
पुनः संसार एवेत्यनुवृत्तिः प्रत्याशानन्तरं तस्मात्सुधीर्विवेकी ज्ञानविचारवान् जायते । नेनेति ज्ञानं वेदान्तवाक्यं
तद्विचारवान् भवेत् १० इदानीं ज्ञानस्यैव मोक्षहेतुत्वं वक्तुं ज्ञानकर्मसमुच्चयवादं दूषणायानुवदति सा

नाज्ञाननाशी नैव रागसंक्षयो भवेत्ततः कर्मसदोषमुद्भवेत् ततः पुनः संसृतिरप्यवारिता तस्मा-
त्सुधीर्ज्ञानविचारवान्भवेत् ॥१० ननु क्रिया वेदमुखेन चोदिता यथैव विद्या पुरुषार्थसाधनं
कर्तव्यता प्राणभृतः प्रचोदिता विद्यासहायत्वमुपैति सा पुनः ११

ध्येननन्वितिशंकायां यथा विद्या वेद-
मुखेन श्रुतिस्मृतिपुराणलक्षणेन । ब्रह्मविदाप्नोति परमित्यादिना पुरुषार्थसाधनमुक्ता तथा ऽभाभ्यामे
वपद्माभ्यां पद्यान्तेवपादिणां गतिः न यो व दानकर्मभ्यां प्राप्यते ब्रह्मशाश्वतामित्यादिना क्रियापित
त्साधनत्वेनोक्ता किंच क्रिया कर्तव्यतात् त्तीयाप्येप्रथमा कर्तव्यतया आवश्यकेत्यतः अवश्यकर्तव्य
तया प्रचोदिता नित्यनैमित्तिकरूपा एवं च तदकरणे प्रत्यवायोत्पत्त्या ज्ञानोत्पत्तिरेव न स्यात् तस्मा

समुच्चयवादी परिहरति नेति त्वदुक्तं नेत्यर्थः सत्यकार्यः अत्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवतीत्यादि
वेदेन बोधितस्य कोऽपि अध्वरः यथान्यान्यपि कारकादिकान् आतं उपकारस्य याजादेः यजते देश[illegible]ति
चमत्कां तते तथा विद्यापि अग्निहोत्रं जुहोतीत्यादि विधिवाक्यतः न तत्स्वरूपेण प्रकाशितैः कर्मभिः सहितैव
मुक्तये विशिष्यते इत्यर्थः विद्याफलदाने कर्मापेक्षा आगमात् अपाजायं गा देवा दर्शादि न आतिपत्तानुमा वदिति
नं सूचितम् ॥१२॥ तदनूपाति द्वांतीदूषयति केचिदिति पञ्चे विदित तर्कवादिनः इति ज्ञानकर्मणोः समुच्चयमु
न सत्यकार्यापि हि यद्यदध्वरः प्रकाशितेऽन्यानपि कारकादिकान् तथैव विद्याविधितः प्रकाशितैर्विशिष्य
ते कर्मभिरेवमुक्तये ॥१३॥ केचिद्वदंतीति वितर्कवादिनः तत् दूष्यसदृष्टविरोधकारणात् देहाभिमाना
दभिवर्धते क्रियाविद्यागताहंकृतितः प्राशिध्यति १४

क्रियासाधनं वदंतीति तद्दूष्यसत्तथा केवलं कर्म मोक्ष
साधनमित्यसत् तथा तत्त्वमित्यसत् तथा तत्त्वमीलितमित्यसत् तत्र हेतुः दृष्टविरोधकारणात् दृष्टो यो विरोधः सर्व
लोकदृष्टविरोधरूपात्कारणात् तदसदित्यर्थः विरोधमेवाह देहाभिमानात्क्रियावर्धते अनात्मनि देहादौ आ
त्मत्वाभिमानात् क्रियावृद्धिः विद्यानुगताहंकृतितः गताहंकृतितः गताहंकृतिर्यस्य तस्य नष्टाहंकृतेः
सिध्यति सार्वविभक्तिकस्तसिः एवं चाहंकारसत्तासत्ताभ्यां क्रियाज्ञानयोः समुच्चयो विरुद्ध इत्यर्थः १४॥

5

प्रियो भूत्वा दुःखजनको भवतः कस्यचिद्धर्म एव सुखजन्यबुध्या प्रवृत्तिः कस्यचित्कर्म एव कदाचिद्दुःखप्रद एवं
तत्रोत्पादितकर्मणा पुनः शरीरं पुनः क्रिया इत्येवं चक्रवदावृत्ति यथा चक्रो भ्रमणमात्रस्वभावो भागः कदाचिदु
परि उपरितन अधः पुनरुपरि पुनरधः एवं जन्मक्रिययोरन्यजनकभावेन परिवृत्तिरिति बोध्यम् ।८।
तस्य चाज्ञानमेव मूलमित्याह अज्ञानमेवेति अत्र विधौ संसारनिवृत्तिलक्षणे कर्तव्ये यत्तद्धान
मेव मूलकारणत्वादज्ञानहानमेव विधीयते साधनत्वेनेति शेषः ननु कर्मैव तन्नाशकमस्तु किं

अज्ञानमेवास्य हि मूलकारणं तद्धानमेवात्र विधौ विधीयते विद्यैव तन्नाशविधौ
पटीयसी न कर्म तज्जं सविरोधमीरितम् ॥९॥

ज्ञानेनेत्याशंक्याह विद्यैव ज्ञानमेव तन्नाशविधौ मूलाज्ञाननाशने पटीयसी समर्था न कर्म समर्थ
मिति शेषः यतः तज्जं अज्ञानजं आत्मस्वरूपाज्ञानजन्यदेहाद्यभिमानजन्यत्वात्कर्मणोऽज्ञानजन्य
त्वं बोध्यं ननु तज्जन्यस्यापि तन्नाशकत्वं वह्निकाककंटादौ दृष्टमित्याशंक्य तज्जन्यत्वंच न तन्नाशका